ॐ व्रतेन दीक्षाम्० (८) आवाहयाम्यहं देवं सत्यं सत्यैकदैवतम्। शुक्लाभं शुक्लवर्णं च शुक्लमालाविभूषितम्। तद्दक्षिणपदद्वये दक्षिणप्रवाहौ शुक्लवर्णं ॐ भूः सत्याय०।। ॐ भद्रं क० (१)। आवाहयाम्यहं देवं भृशं च परमेश्वरम्। कृष्णाब्जं नीलकण्ठञ्च चतुर्बाहुं सुरेश्वरम्। तद्दक्षिणपदद्वये दक्षिणकूर्परे कृष्णवर्णे ॐ भूः भृशाय।।७।। ॐ व्व्य ठं० सोम० (२)। आवाहयाम्यहं देवमाकाशञ्च महाबलम्। शब्दब्रह्मपरं देवं हेमञ्च कृष्णसन्निभम्। तद्दक्षिणोपरिस्थितैकपदे दक्षिणप्रवाहौ कृष्णवर्णे ॐ भूः आकाशाय।।८।।

ॐ आ वायो० (३) आवाहयाम्यहं देवं देवदेवं महाजवम्। जगद्रूपं जगद्व्याप्रं स्थितिसंहारकारकम्। दक्षिणाग्नेयकोणपदे दक्षिणप्रवाहौ धूम्रवर्णे—ॐ भूः वायवे नमः।।९।। ॐ पूषन्तव० (४) आवाहयाम्यहं देवं पूषणं महसाम्पदम्। जगन्नेत्रं महान्तञ्च स्थितिसंहारकारकम्। तत्पश्चिमैकपदे दक्षिणमणिबन्धे रक्तवर्णे ॐ भूः पूष्णे नमः।।१०।। सविता प्रथमे (५) आवाहयाम्यहं देवं वितथं दिव्यतेजसम्। ब्रह्मरूपं जगन्नाथं चतुर्वक्त्रं प्रजापतिम्। तदधः—द्विपदे दक्षिपार्श्वे शुक्लवर्णे ॐ भू० वितथाय।।११।। ॐ सविता त्वा (६)। आवाहयाम्यहं देवं पीतवर्णं गृहक्षतम्। कमलाक्षं चतुर्बाहुं त्रैलोक्याधिपतिं प्रभुम्। तत्पश्चिमपदद्वये दक्षिणपार्श्वे पीतवर्णे ॐ भूः गृहक्षताय नमः।।१२।। ॐ यमाय त्वा० (७) अहमावाहयिष्यामि यमं महिषवाहनम्। ऊर्ध्वकेशं विरूपाक्षं भैरवं रक्तलोचनम्।। तत्पश्चिमपदद्वये दक्षिणोरौ कृष्णवर्णे ॐ भूः यमाय०।।१३।। ॐप्र तद्वोचे० (८)। अहमावाहयिष्यामि गन्धर्वगणशोभितम्। गीतनृत्यसमायुक्तं सुगन्ध-कुसुमान्वितम्। तत्पश्चिमपदद्वये दक्षिणजानुप्रदेशे रक्तवर्णं ॐ भूः गन्धर्वाय।।१४।।

ॐ सुपर्णः पार्ज्जन्यः० (९)। आवाहयाम्यहं देवं भृङ्गं च परमेश्वरम्। तृष्णाङ्गं

(१) ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवा सस्तनूभिर्व्यशेमहि देवहितं यदायुः।

(२) ॐ व्वय सोम व्रते मनस्तनूषु बिभ्रतः। प्रजावन्तः शचेमहि।

(३) ॐ आ वायो भूष शुचिपा ऽउप नः सहस्र ते नियुतो व्विश्ववार। उपो तेऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं व्वायवे त्वा।

(४) ॐ पूषन्तव व्रते व्वयं न रिष्येम कदाचन। स्तोतारस्त ऽइह स्मसि।

(५) ॐ सविता प्रथमेऽहन्नग्निर्द्वितीये व्वायुस्तृतीयऽ आदित्यश्चतुर्थे चन्द्रमाः पञ्चमऽ ऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे। मित्रो नवमे व्वरुणो दशमऽ इन्द्रऽ एकादशे व्विश्वे देवा द्वादशे।

(६) ॐ सविता त्वा सवाना सुवतामग्निर्गृहपतीनां सोमो व्वनस्पतीनाम्। बृहस्पतिर्व्वाच ऽइन्द्रो ज्येष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो व्वरुणो धर्मपतीनाम्।

(७) ॐ यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा। स्वाहा धर्माय स्वाहा धर्मः पित्रे।

(८) ॐ प्र तद्वोचेदमृतं नु व्विद्वान् गन्धर्वो वाम व्विभृतं गुहा सत्। त्रीणि पदानि निहिता गुहाऽस्य यस्तानि व्वेद स पितुः पिताऽसत्।

(९) ॐ सुपर्णः पार्जन्यऽ आतिर्व्वाहसो दर्व्विदा ते व्वायवे बृहस्पतये व्वाचस्पतये पैङ्गराजोऽलजऽ आन्तरिक्षः प्लवो मद्गुर्मत्स्यस्ते नदीपतये द्यावापृथिवीयः कूर्मः।

नीलकण्ठश्च चतुर्बाहुं महद्युतिम्। तत्पश्चिमपदद्वये दक्षिणजंघायां कृष्णवर्णे ॐ भूः भृङ्गराजाय।।१५।। ॐ तद्विष्णोः (१) प० ११।। अहमावाहयिष्यामि मृगं च परमेश्वरम्। सुवर्णाभं नीलकण्ठं चतुर्बाहुं सुशोभनम्। तत्पश्चिमोपरिस्थैकपदे दक्षिणस्फिचि पीतवर्णे ॐ भूः मृगाय नमः।।१६।। ॐ पितृभ्यः स्व० (२) अहमावाहयिष्यामि पितरञ्च सुधाकृतिम्। उद्दीप्य लोके तिष्ठन्तं चन्द्रार्कसदृशद्युतिम्।। तत्पश्चिमे नैर्ऋत्यकोणपदे पादयोः रक्तवर्णेषु ॐ भूः पितृभ्यो नमः।।१७।। ॐ द्रविणोदाः पि० (३) आवाहयाम्यहं देवं विभुं दौवारिकं तथा। जीवरूपं त्वयैकेन यदिदं धार्यते जगत्। तदुत्तरैकपदे वामस्फिचि रक्तवर्णे ॐ भूः दौवारिकाय नमः।।१८।। ॐ सुषुम्णः सूर्यः (४)। अहमावाहयिष्यामि सुग्रीवं शुक्लवर्णकम्। पिङ्गनेत्रं महास्थूलं भैरवं तीक्ष्णदंष्ट्रकम्। तदुत्तरपदे तत्प्राक्पदे च वामजङ्घायां शुक्लवर्णे ॐ भूः सुग्रीवाय नमः।।१९।।

ॐ नक्षत्रेभ्यः स्वाहा० (५)। अहमावाहयिष्यामि पुष्पदन्तं सुशोभनम्। रक्ताभं रक्तवर्णञ्च रक्तमालाविभूषितम्।। तदुत्तरपदद्वये वामजानौ रक्तवर्णे०। ॐ भूः पुष्पदन्ताय नमः।।२०।। ॐ इमम्मे० (६)। आवाहयाम्यहं देवं वरुणं कमलेक्षणम्। शुक्लाम्बरधरं देवं शुक्लमालाविभूषितम्। तदुत्तरपदद्वये वामोरौ शुक्लवर्णे ॐ भूः वरुणाय नमः।।२१।। ॐ ये रूपाणि० (७)। आवाहयाम्यहं देवमसुरञ्च मरुत्प्रियम्। पीतरक्तं महारौद्रमसुरं दैत्यमङ्गलम्। तदुत्तरपदद्वये वामपार्श्वे पीतवर्णे ॐ असुराय०।।२२।। ॐ असवे स्वाहा० (८) अहमावाहयिष्यामि शोषं च कृष्णवर्णकम्। रक्ताम्बरं विशालाक्षं यज्ञमूर्त्तिं

(१) ॐ तद्विष्णोः परमं पदठं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्।

(२) ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन्नि पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम्।

(३) ॐ द्रविणोदाः धिर्पीपति जुहोत व्र च तिष्ठत। नेष्ट्रदृतुभिरिष्यत।

(४) ॐ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम। सनऽ इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा व्वाट् ताभ्यः स्वाहा।

(५) ॐ नक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहाऽहोरात्रेभ्यः स्वाहाऽत्रमासेभ्यः स्वाहा मासेभ्यः स्वाहाऽऋतुभ्यः स्वाहार्तवेभ्यः स्वाहा संव्वत्सराय स्वाहा द्यावापृथिवीभ्यः स्वाहा चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा व्वसुभ्यः स्वाहा रुद्रेभ्यः स्वाहाऽऽदित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा व्विश्वेभ्यो देवेभ्यः स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः व्वनस्पतिभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा।

(६) ॐ इमम्मे व्वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके।

(७) ॐ ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधया चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टॉल्लोकान्प्रणुदात्यस्मात्।

(८) ॐ असवे स्वाहा व्वसवे स्वाहा व्विवस्वते स्वाहा गणश्रिये स्वाहा गणपतये स्वाहा व्विभुवे स्वाहाऽधिपतये स्वाहा शूषाय स्वाहा सठं० सर्पाय स्वाहा चन्द्राय ज्योतिषे स्वाह मलिम्लुचाय स्वाहा दिवा पतये स्वाहा।

सुरेश्वरम्। तदुत्तरपदद्वये वामपार्श्वे कृष्णवर्णे ॐ भूः शोषाय०।।२३।। ॐ सूर्य्यरश्मि० (१)। अहमावाहयिष्यामि पापं यक्ष्माणमेव च। पापरूपं पीतवर्णं पापकर्मरतं सदा। तदुत्तरोपरिस्थैकपदे वाममणिबन्धे पीतवर्णे ॐ भूः पापाय नमः।।२३।। ॐ शिरो मे० (२)। अहमावाहयिष्यामि रोगं रोगेण सन्निभम्। रक्ताक्षं रक्तवर्णं च रक्तमालाविभूषितम्।। तदुत्तरे वायव्यकोणपदे वामप्रवाहौ रक्तवर्णे ॐ भूः रोगाय नमः।।२५।।

ॐ नमोऽस्तु सर्पे० (३)। अहमावाहयिष्यामि अनन्तं वासुकिन्तथा। कालं कर्कोटकं चैव कुण्डलीकृष्णपिङ्गलम्।। तत्रागेकपदे वामप्रवाहौ रक्तवर्णे ॐ भूः अहये नमः।।१६।। ॐ इषे त्वोर्ज्जे० (४)। अहमावाहयिष्यामि मुख्यं देवं महाबलम्। अरुणश्मश्रुकेशान्तं त्रिनेत्रं चैव षड्भुजम्। तत्राक्पदे ततोऽपि दक्षिणे चेति पदद्वये रक्तवर्णे ॐ भूः मुख्याय नमः।।२७।। ॐ बण्महाऽ असि० (५)। अहमावाहयिष्यामि भल्लाटं धूम्रलोचनम्। कृष्णवर्णं विशालाक्षं यज्ञकर्तुर्वरप्रदम्। तत्राक् पदद्वये वामबाहौ कृष्णवर्णे ॐ भूः भल्लाटाय नमः।।२८।। ॐ व्यर्ठ० सोम (६) अहमावाहयिष्यामि सोमं च सौम्यदैवतम्। अमृतस्राविणं देवं सर्वलोकोपकारकम्। तत्राक्पदद्वये श्वेतवर्णे ॐ भूः सोमाय०।।२९।। ॐ उदुत्यं० (७)। आवाहयाम्यहं देवमुरगं रत्नभूषितम्।। तत्राक्पदद्वये वामांसे कृष्णवर्णे वर्षाय०।।३०।। ॐ उत नो० (८)। अहमावाहयिष्यामि अदितिञ्च सुरेश्वरीम्। मातरं सर्वदेवानां पीतवर्णां सुशोभनाम्। तत्राक्पदद्वये वामश्रोत्रे पीतवर्णे ॐ भूः अदितये नमः।।३१।।

ॐ अदितिर्द्यौ० (९) अहमावाहयिष्यामि दितिं चैव सुरेश्वरीम्। पीतवर्णां महाकायां सर्वदा नवमातरम्। तत्रागेकपदे वामनेत्रे पीतवर्णे ॐ भूः दित्यै नमः।।३२।। ततः

(१) ॐ सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयां अजस्रम्। तस्व पूषा प्रसवे यातिव्विद्वान्त्सम्पश्यन्विश्वा भुवनानि गोपाः।

(२) ॐ शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि। राजा मे प्राणोऽअमृतर्ठ० सम्राज् चक्षुर्विराट् श्रोम्।

(३) ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। येऽ अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः।

(४) ॐ इषे त्वोर्जे त्वा व्वायवस्थ देवो वः सविता प्रपियतु श्रेष्ठतमाय कर्मणऽ आप्यायध्वमघ्न्याऽ इन्द्राय भागं प्रजावतीरनमीवाऽअयक्ष्मा मा क स्तेनऽ ईशत माऽघशर्ठ० सो ध्रुवाऽ अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि।

(५) ॐ बण्महाँ असि सूर्य बडादित्य महाँऽअसि। महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँऽअसि।

(६) ॐ व्ययठं सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि।

(७) ॐ उदुत्यं जातवेदसं देवं व्वहन्ति केतवः। दृशे व्विश्वाय सूर्यम्।

(८) ॐ उत नोऽहिर्बुध्न्यः शृणोत्वज ऽएकपात्पृथिवी समुद्रः। व्विश्वे देवाऽ ऋतावृधी हुवाना स्तुता मन्त्राः कविशस्ताऽअवन्तु।

(९) अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। व्विश्वे देवाऽऽ अदितिः पञ्च जनाऽअदितिर्जातमदितिर्जनित्वम्।

(१०) ॐ आपोऽ अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु। व्विश्वं र्ठ हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूतऽएमि।

शिखिपदाध:स्थितकोणपदे मुखे शुक्लवर्णे ॐ आपो अस्मान् ० (१०)। अहमावाहयिष्यामि आपो याः स्फटिकप्रभाः। कर्पूरसदृशाः सौम्याः क्षीरोदकपरिप्लुताः ॐ भूः अद्भ्यो नमः।।३३।। आग्नेये वायुकोणपदाधःकोणपदे दक्षिणहस्ते शुक्लवर्णे ॐ उपया० सावित्रोऽसि० (१) सवितारं स्वर्धुनीलोके विमलं च गजाननम्। एकाक्षरं शिवं सौरिं सवितारं महेश्वरम्। ॐ भूः सवित्राय०।।३४।। नैर्ऋत्ये पितृपदाधःकोणपदे मेढ्रे श्वेतवर्णे ॐ मर्माणि ते० (२) आवाहयाम्यहं देवं जयं देवेन्द्रपूजितम्। विद्युद् ध्वनिभवं भीमजवं हि विजयप्रभुम्।। ॐ भूः जयाय नमः।।३५।। वायव्ये रोगपदाधः कोणपदे वामहस्ते रक्तवर्णे ॐ सूत्रामाणं० (३)। आवाहयाम्यहं देवं रुद्रञ्च जगतः प्रभुम्। चतुर्भुजं वृषारूढं सर्वलोकनमस्कृतम्। ॐ भूः रुद्राय नमः।।३६।। ततो मध्यगतनवकोष्ठकसंलग्नपूर्वपदत्रये दक्षिणस्तने कृष्णवर्णे ॐ अर्यमणं० (४)। आवाहयाम्यर्यमणमहं देवं त्रिलोचनम्। वनस्पतिसमाकारं कृष्णवर्णं महाप्रभुम्। ॐ भूः अर्यम्णे नमः।।३७।।

तद्दक्षिणाग्नेयकोणपदे दक्षिणहस्ते रक्तवर्णे ॐ उपया० सवित्रो० (५) ॐ सवित्रे नमः। आवाहयाम्यहं देवं सवितारं दिवाकरम्। सप्ताश्वरथसंयुक्तं तमोवृन्दनिवारणम्।।३८।। तदधः पश्चिमपदत्रये जठरदक्षिणभागे शुक्लवर्णे ॐ विवस्वन्ना० (६)। अहमावाहयिष्यामि विवस्वन्तं महाबलम्। रक्तनेत्रं विशालाक्षं यज्ञमूर्त्तिं सुरेश्वरम्।। ॐ भूः विवस्वते०।।३९।। तत्पश्चिमनैर्ऋत्यकोणपदे वृषणयोः रक्तवर्णे—ॐ इन्द्रः सुत्रामा० (७)। अहमावाहयिष्यामि विबुधाधिपतिं प्रभुम्। नाकाधिपं सहस्राक्षं खड्गखेटकधारिणम्।। ॐ विबुधाधिपाय नमः।।४०।। तदुत्तरपदत्रये जठरवामभागे श्वेतवर्णे ॐ तन्मित्रस्य० (८)। अहमावाहयिष्यामि

(१) ॐ उपयामगृहीतोऽसि सावित्रोऽसि च नोधाश्चनोधाऽ असि चनो मयि धेहि। जिन्व यज्ञ जिन्व यज्ञपतिं भगाय देवाय त्वा सवित्रे।

(२) ॐ मर्माणि ते व्वर्मणा च्छादयामि सोमस्त्वा राजाऽमृतेनानु वस्ताम्। उरोर्वरीयो व्वरुणेस्ते कृणोतु जयन्तं त्वाऽनु देवा मदन्तु।

(३) ॐ सुत्रामाणं पृथिवी द्यामनेहस ठं सुशर्माणमदिति ठं प्रणीतिम्। दैवी नाव स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये।

(४) ॐ अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय। व्वाचं व्विष्णुठं, सरस्वती सवितारं च व्वाजि स्वाहा।

(५) ॐ उपयामगृहीतोऽसि सावित्रोऽसि च नोधाश्चनोधाऽअसि चनो माय धेहि। जिन्व यज्ञपति भगाय देवाय त्वा सवित्रे।

(६) ॐ व्विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्त्स्व। श्रदस्मै नरो व्वचसे दधातन यदाशीर्दा दम्पती व्वाममश्नुतः। पुमान्पुत्रो जायते व्विन्दते व्वस्वधा व्विश्वाहाऽरपऽएधते गृहे।

(७) ॐ इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृडीको भवतु व्विश्ववेदाः। व्वाधतां द्वेषो अभयं कृणोतु सुवीर्य्यस्य पतयः स्याम।

(८) ॐ तन्मित्रस्य व्वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्यौरुपस्थे। अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति।

मित्रं चारुणसन्निभम्। वज्रहस्तं सुरश्रेष्ठं यज्ञकर्मवरप्रदम्। ॐ भूः मित्राय०।।४१।। तदुत्तरैकपदे वामहस्ते श्वेतवर्णे ॐ अभि गोत्राणि० (१) आवाहयामि तं देवं द्विभुजं राजयक्ष्मणम्। धनुर्बाणसमायुक्तं यज्ञकर्मवरप्रदम्। ॐ भूः राजयक्ष्मणे नमः।।४२।। तत्प्राक्पादत्रये वामस्तने रक्तवर्णे ॐ पृथिवीच्छन्दः (२) पृथ्वीधरं महत्तेजः स्फटिकच्छविमीश्वरम्। भूतनाथं महाकायं देवमावाहयाम्यहम्। ॐ भूः पृथ्वीधराय०।।४३।। तत्प्रागीशानकोणपदे उरसि शुक्लवर्णे ॐ आ ते वत्सो० (३) अहमावाहयिष्यामि आपवत्सं महाप्रभुम्। कर्पूरसदृशं सौम्यं क्षीरोदपरिपूरितम्।। ॐ भूः आपवत्साय: नमः।।४४।। मध्ये नवपदे हृदये नाभौ च अष्टदले ॐ आ ब्रह्मन्० (४) सर्वदेवप्रधानञ्च सर्वकामफलप्रदम्। अग्रतः सर्वसम्पूज्यं प्रारम्भे यज्ञकर्मणि।। ॐ भूः ब्रह्मणे नमः।।४५।। ईशान्यां धूम्रवर्णायाम् ॐ ईशाव्वास्यम्० (५) ॐ भूः चरक्यै०।।१।। आग्नेय्यां रक्तवर्णायाम् ॐ अग्निन्दूतम् भूः ॐ विदार्यै०।।२।। नैर्ऋत्यां पीतहरितवर्णायां ॐ नमः स्त्रुत्याय० (६) ॐ भूः भूतनायै०।।३।। वायव्ये कृष्णवर्णायां वायव्ये वा० (७) ॐ भूः पापराक्षस्यै०।।४।। पूर्वे रक्तवर्णे ॐ यत्र बाणाः सं०। (८) ॐ भूः स्कन्दाय०।।१।। तद्दक्षिणे कृष्णवर्णे अर्यमणम्० ॐ भूः अर्यमणं० (९)।।२।।

(१) ॐ अभि गोत्राणि सहसा गाहमानाऽदयो व्वीरऽशतमन्युरिन्द्रः। दुश्च्यवनः पृतनाषाड- युध्योऽस्माकꣳ सेनाऽ अवतु प्रयुत्सु।

(२) ॐ पृथिवी च्छन्दोऽन्तरिक्ष छन्दो द्यौश्छन्दः समाश्छन्दो नक्षत्राणि च्छन्दो वाक् छन्दो मनश्छन्दः कृषिश्छन्दो हिरण्यं छन्दो गौश्छन्दोऽजा च्छन्दोऽश्वश्छन्दः।

(३) ॐ आ ते व्वत्सो मनो यमत्परमा अचित्सधस्थात्। अग्ने त्वाङ्कमया अगिरा।

(४) ॐ आ ब्रह्मन्-ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यमानस्य व्वीरो जायतां निकामेनिकामे नः पर्जन्यो व्वर्षतु फलवत्योऽनऽओषधयः पच्यतां योगक्षेमो नः कल्पताम्।

(५) ॐ ईशाव्वास्यमिदꣳ० सर्वं यत्किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्।

(६) ॐ नमः स्त्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कूल्याय च सरस्याय च नमो नादेयाय च व्वैशन्ताय च।

(७) ॐ व्वायव्यैर्व्वायव्यान्याप्नोति स तेन द्रोणकलशम्। कुम्भीभ्याम्मम्भृणौ सुते स्थालीभिः स्थालीराप्नोति।

(८) ॐ यत्र बाणाः सम्पतन्ति कुमारा व्विशिखा इव। तत्रऽ इन्द्रो बृहस्पतिरदितिः शर्म यच्छतु व्विश्वाहा शर्म यच्छतु।

(९) ॐ अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय। व्वाचं विष्णुꣳ० सरस्वतीꣳ सवितारं च व्वाजिनꣳ० स्वाहा।

(१०) ॐ सरोभ्यो धैवरमुपस्थावराभ्यो दाशं व्वैशन्ताभ्यो व्वैन्दंनड्वलाभ्यः शौष्कलं पाराय मार्गारमवाराय केवर्तं तीर्थेभ्यऽ आन्दं विषमेभ्यो मैनालꣳ स्वनेभ्यः आन्दं विषमेभ्यो मैनालꣳ स्वनेभ्यः पर्णकं गुहाभ्यः किरातꣳ० सानुभ्यो जम्भकं पर्वतेभ्यः किंपूरुषम्।

पश्चिमे रक्तवर्णे ॐ सरोभ्यो० (१०) ॐ भूः जम्भकाय न०।।३।। उत्तरे वर्णे ॐ कास्वि-दासी० (१) ॐ भूः पिलिपिच्छाय न०।।४।। ईशा० रक्तवर्णे यमाय त्वा (२) भीम-रूपाय नमः।।१।।

अग्निकोणे कृष्णवर्णे ॐ त्र्यम्वकं० (३) त्रिपुरारये०।।२।। नैर्ऋत्ये पीतवर्णे ॐ असुन्वन्त० (४) अग्निजिह्वाय०।।३।। वायव्ये ॐ वातो वा० (५) रक्तवर्णे करालाय।।४।। पूर्वे हेतुकायः ॐ हेमन्तेन ऋ० (६) कृष्णवर्णे दक्षिणे कृष्णे अग्निवेतालकाय० ॐ अग्निं दूतम् (७)। पश्चिमे कृष्णे ॐ वरुणस्योत्तम्भनम् (८)।। उत्तरे ॐ कुविन्दङ्ग० (९) पीतवर्णे० ईशानपूर्वयोर्मध्ये गन्धमाल्याय ॐ गन्धद्वारां० (१०) ज्वालास्याय० ॐ महीद्यौः बाह्यदेवताः प्रासादे ताः प्रपूजयेत्। इन्द्रादीन् दश दिक्पालांश्च पूजयेत्।

१. ॐ तमीशानं० शिखिने नमः।
२. ॐ महाँ इन्द्र० पर्जन्याय नमः।
३. ॐ धन्वना गाः० जयन्ताय नमः।
४. ॐ महाँ इन्द्रो य० कुलिशायुधाय नमः।
५. ॐ सूर्यरश्मि० सूर्याय नमः।
६. ॐ व्रतेन दीक्षाम्० सत्याय नमः।
७. ॐ भद्रं कर्णेभिः० भृशाय नमः।
८. ॐ वयर्ठ० सोम० आकाशाय नमः।
९. ॐ आ वायो भूष० वायवे नमः।
१०. ॐ पूषन्तव० पूष्णे नमः।
११. ॐ सविता प्रथ० वितथाय नमः।
१२. ॐ सविता त्वा स० गृहक्षताय नमः।
१३. ॐ यमाय त्वा यमाय नमः।
१४. ॐ प्र तद्वोचेद० गन्धर्वाय०।
१५. ॐ सुपर्णः पार्जन्यः० भृङ्गराजाय०।
१६. ॐ तद्विष्णोः प० मृगाय नमः।
१७. ॐ पितृभ्यः स्व० पितृभ्यो नमः।
१८. ॐ द्रविणोदाः पि० दौवारिकाय नमः।
१९. ॐ सुषुम्णः सूर्यर० सुग्रीवाय नमः।
२०. ॐ नक्षत्रेभ्यः स्वा० पुष्पदन्ताय०।
२१. ॐ इमम्मे व० वरुणाय नमः।
२२. ॐ ये रूपाणि० असुराय नमः।

---

(१) ॐ का स्विदासीत्पूर्वचिभिः किँ स्विदासीद् बृहद्वयः। का स्विदासीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला।

(२) ॐ यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा। स्वाहा धर्माय स्वाहा धर्मः पित्रे।

(३) ॐ त्र्यबकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्।

(४) ॐ असुन्वन्तमयजमामिच्छ स्तेनस्येत्यामन्विदि तस्करस्य। अन्यमस्मदिच्छ सा तऽ इत्या नमो देवि निर्ऋते तुभ्यमस्तु।

(५) ॐ वातो वा मनो गन्धर्व्वाः सप्तविर्ठ० शतिः। तेऽ अग्नेऽश्वमयुञ्जंस्तेऽ अस्मिञ्जवमादधुः।

(६) ॐ हेमन्ते न ऋतुना देवास्त्रिणवे मरुतस्तुताः। बलेन शक्वरीः सहो हविरिन्द्रे व्वयो दधुः।

(७) ॐ अग्निं दूतं पुरो दधे हव्यवाहमुपब्रवे। देवाँ आसादयादिह।

(८) ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भतर्जनीस्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्य ऋतसदनमसि व्वरुणस्य ऋतसदनमासीद।

(९) ॐ कुविन्दङ्ग यवमन्तो यवं विद्यथा दान्त्यनुपूर्वं व्वियूय। ईहेहैषां कृणुहि भोजनानि ये बर्हिषो नमऽउक्तिं यजन्ति।

(१०) ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।

२३. ॐ असवे स्वा० शोषाय नमः।
२४. ॐ सूर्यरश्मिह० पापाय नमः।
२५. ॐ शिरो मे० रोगाय नमः।
२६. नमोऽस्तु स० अहये नमः।
२७. इषे त्वोर्जे० मुख्याय नमः।
२८. उप० सावित्रो० सवित्रे नमः।
२९. विवस्वन्ना० विवस्वते०।
३०. इन्द्रः सुत्रामा विबुधाधिपाय नमः।
३१. तन्मित्रस्य० मित्राय नमः।
३२. अभिगोत्राणि० राजयक्ष्मणे०।
३३. पृथिवी छन्दः, पृथिवीधराय०।
३४. आ ते वत्सो आपवत्साय०।
३५. आ ब्रह्मन्० ब्रह्मणे नमः।
१. ईशा वास्यम्० चरक्यै नमः।
२. अग्निं दू० विदार्यै०।
३. नमः स्रुत्या० पूतनायै०।
४. वायव्यैर्वा० पापराक्षस्यै०।
१. यत्र बाणा, स्कन्दाय०।
२. अर्यममण० अर्यम्णे०।
३. सरोभ्यो घै० जृम्भकाय०।
४. का स्विदा० पिलिपिच्छाय०।
इत्यादिभिर्मन्त्रैः।

(१) ततो वास्तुमण्डलमध्ये कलशं संस्थाप्य। (२) तत्र वरुणमावाह्य वास्तोष्पतिमूर्तेः (३) स्थापनं 'वास्तोष्पत' इति पूजनं च, (४) प्रार्थना 'यथा मेरुगिरेः शृङ्गं देवानामालयः सदा। तथा ब्रह्मादिदेवानां मम गेहे स्थिरो भव' इति वेद्यां वितानबन्धनम्। अथ दक्षिणतो ब्रह्माणमुपवेश्य अग्नेरुत्तरतः प्रणीतातोऽतिरिक्तमुदपात्रं प्रतिष्ठाप्य (पार० गृ० ३/४५ कर्क) श्रपयित्वा प्रोक्षण्युत्पवनान्ते आघारादिहोमात्प्राक् (पा० ३/४/५ क० हरि०) बहिर्निष्क्रम्य द्वारसमीपे गृहाभिमुखः स्थित्वा 'ब्रह्मन् प्रविशामि' इति ब्राह्मणं पृच्छेत् यजमानः। 'ॐ प्रविश' इति ब्रह्मणाऽनुज्ञातः 'ॐ ऋतं प्रपद्ये शिवं प्रपद्ये' इति मन्त्रेण शालां प्रविश्य स्वासने उपविश्य उपयमनकुशानादाय तिष्ठन् समिधोऽभ्याधाय अग्निं पर्युक्ष्य पवित्रे प्रणीतासु निधाय दक्षिणं जान्वाच्य 'इह रति'रिति षट् आहुतीराज्येन जुहुयात् (पार० ३/५/७ कर्क० हरि० (५)।

(१) ब्रह्मस्थाने ततो विद्वान् कुर्यादाधारमक्षतैः। तस्मिन् संस्थापयेत्कुम्भं बर्द्धन्या सह पूरितम्' इति वास्तुयागतत्वे वचनात्। विश्वकर्मप्रकाशे तु—'कलशे स्थापयेदेवं वरुणं वारुणैस्ततः' (५/१७०) इत्यादिना कलशस्थापनमुक्तं, स्थानं नोक्तम्। तत्र सामान्यनियमात् ईशान्यां

(२) कलशे सर्वौषध्यादिप्रक्षेपणानन्तरं द्रव्यविशेषाः प्रक्षेप्या उक्ता वास्तुशान्तौ, ते यथा—'वटाक्वटोदुम्बरस्य वेतसस्य तथैव च। अश्वत्थस्यैव मूलं च पञ्च काषायकाः स्मृताः। तुलसी सहदेवी च विष्णुक्रान्ता सतावरी। मूलान्येतानि गृह्णीयाद्वास्तुशान्तौ विशेषतः। वि. प्र०. ५/१०४-१०५ इति।

(३) वास्तुमूर्तिः सर्पाकारा कार्या—'इति प्रार्थ्य ततो भूमौ संलिखेद्वास्तुपुरुषम्। पिष्टातकैस्तण्डुलैर्वा नागरूपधरं विभुम्' इति (वि. प्र. १ अ०) वचनात्। 'गृहवास्तुं प्रवक्ष्यामि येन देवमयो भवेत्। ईशानादिनिर्ऋत्यन्तं वास्तुः सर्पः प्रकीर्तितः। इति प्रतिष्ठासारणौ सङ्गमशक्तितन्त्रधृतवनाच्च।

(४) अत्र वास्तुदेवतापूजन-बलिदान-होम-प्रतिमानिखननान्तःपरिष्टाद्युक्तो मुख्यः पक्षः। प्रतिमानिखननरहितो मात्स्योक्तो मध्यमः। पूजाबलिदानमन्त्रः शारदोक्तः कनिष्ठः। न च मतभेदात् सर्वेऽपि मुख्यकल्पा एवेति वाच्यम्। 'एककर्मणि गुणविशेषे फलविशेषः' (का० श्रौ०) इति न्यायेन समानफलानुत्पत्तेः।

(५) वास्तोष्पत इति मन्त्रैश्चतुर्भिर्होमः शिख्यादिहोमात्पूर्वमेव कार्य इति युक्तं पश्यामः। अत्र

ॐ इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वा०। इदमग्नये न मम १ ॐ उपसृजन् धरुणं मात्रे वरुणो मातरं धयन्। रायस्पोषमस्मासु दीधरत् स्वाहा। इदमग्नये न मम २ ॐ वास्तोष्पते प्रतिजानी० यत्त्वेमहे० इदं वास्तोष्पतये न मम ३ वास्तोष्पते प्रतर० रणेभिरिन्दो। अजरासस्ते सख्य स्याम पितेव पुत्रान्प्रति नो जुषस्व शं नो भ० इदं वास्तोष्पतये नं० ४। ॐ वास्तोष्पते शग्मया शर्ठ० सदा ते सक्षीम हिरण्मयागातुमत्या। पाहि क्षेम उतयोगे वरं नो यू० ५ (ऋ० ५/४/२१-१-१३) ॐ अमीवहा वा० इदं वास्तोष्पतये ६ (ऋ० ५/४/१२/१)। अथ ब्रह्मणाऽन्वारब्ध: आधारावाज्यभागौ हुत्वा (पार० ३/४/७ हरि०) चरुमभिघार्य स्थालीपाकेन स्रुवेण षडाहुतीर्जुहुयात् (पार० ३/३/८) तत्र मन्त्राः—ॐ अग्निमिन्द्रं बृहस्पतिं विश्वांश्च देवानुपह्वये। सरस्वती च वाजी च वास्तु मे दत्त वाजिनः स्वा० इदमग्नये इन्द्राय बृहस्पतये विश्वेभ्यो देवेभ्यः सरस्वत्यै वाज्यै च न मम १ ॐ सर्वदेवजुनान् सर्वान् हिमवन्तर्ठ० सुदर्शनम्। वसूंश्च रुद्राना-दित्यानीशानं जगदैः सह। एतान् सर्वान् प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वा० इदं सर्व-देवजनेभ्यो हिमवते सुदर्शनाय वसुभ्यो रुद्रेभ्य आदित्येभ्य ईशानाय जगदेभ्यश्च नं. २।

ॐ पूर्वाह्णमपराह्णं चोभौ मध्यन्दिना सह। प्रदोषमर्द्धरात्रं च व्युष्टां देवीं महापथाम्। एतान् सर्वान् प्र० स्वाहा, इदं पूर्वाह्णायाऽहराह्णाय मध्यन्दिनाय अर्धरात्राय व्युष्टायै देव्यै महापथायै च न मम ३ ॐ कर्त्तारं च विकर्त्तारं विश्वकर्माणमोषधींश्च वनस्पतीन्। एतान् सर्वान् प्रपद्येऽहं वा०। इदं कर्त्रे विकर्त्रे विश्वकर्मण ओषधीभ्यो वनस्पतिभ्यश्च न० ४ ॐ धातारं च विधातारं निधीनां च पतिर्ठ० सह। एतान् सर्वा०। इदं धात्रे निधानां च पतये न मम ५ ॐ स्योनर्ठ० शिवमिदं वास्तु दत्तं ब्रह्मप्रजापती सर्वाश्च देवताः स्वा०। इदं ब्रह्मणे प्रजापतये सर्वाभ्यो देवताभ्यश्च न० ६ अथ द्रव्यत्यागः—ततो ग्रहहोमं समित्तिल-चर्वाज्यैः प्रत्येकं प्रतिद्रव्यमष्टसङ्ख्यया अष्टाविंशत्यादिसङ्ख्यया वा विदध्यात्। ग्रहहोमे चरुहोमो वैकल्पिकः। ततोऽत्र वास्तोष्पतेः प्रधानत्वात् प्रधानान्तरस्येव आदौ होमः। तद्यथा—वास्तोष्पते प्रति जनी० चतुष्पदे स्वाहा० इति चतुर्भिः समित्तिलचर्वाज्यैः प्रति-

वास्तुशान्तौ वास्तोष्पतिदेवस्य प्रधानत्वात् प्रधानहोमस्य च पूर्वमेव न्याय्यत्वात्। परिशिष्टे—'वास्तोष्पत इति चतसृभिश्चरुण समित्तिलपायसाज्यैः केवलाज्येन वा हुत्वा होमशेषं समाप्य' (अग्र० प०) इत्युक्तेश्च। पद्धतिकारैस्तु सर्वैः शिख्यादिहोम एव पूर्वमुक्तः तैः शिख्यादयोऽपि प्रधानत्वेनैवाङ्गीकृताः। शिख्यादिहोमानन्तरं वास्तोष्पत इति चतुर्भिर्मन्त्रैः प्रधानहोमः, ततो बिल्व-होम इति पद्धतिक्रमः। अस्माकं मते तु आदौ प्रधानहोमः ततः शिख्यादिहोमः। ततो बिल्वहोमः। प्रधानहोमश्च प्रतिद्रव्यं प्रतिमन्त्रं वा अष्टादिसंख्यया, शिख्यादिहोमश्चाष्टसंख्यया, सामान्यनियमात्। 'होमो ग्रहादिपूजायां शतमष्टोत्तरं भवेत्। अष्टाविंशतिरष्टौ वा यथाशक्तिर्विधीयते। अष्टोत्तरसहस्रं वा सत्संख्या परिकीर्तिता' इति वचनात्। अथवा शिख्यादिभ्यो दश दशसंख्यया होमः कार्यः। 'इतरान् दशभिर्देवानाहुतिभिः प्रकल्पयेत्' इति वास्तुकागतत्वे रघुनन्दनधृतवचनात्। अथवा 'वास्तोष्पत इति चतसृभिः प्रत्यृचं हुत्वा' इति सूत्रविहितहोमे सकृत्संख्या यथा गृह्यते, तद्वदत्रापि सकृत्संख्यैव ग्राह्या। तेन शिख्यादिभ्यः एकैकाऽहुतिरित्यपि पक्षो बोध्यः।

द्रव्यमष्टोत्तरशतं जुहुयात्। ततः 'अघोरेणाथ मन्त्रेण घृतेनाष्टोत्तरं शतम्। जुहुयाद्वास्तु-पुंसोऽपि सन्धानार्थन्तु मर्मणाम्' इति गृह्यकारिकोक्तेः 'अघोरेभ्य' इति मन्त्रेण आज्येनाष्टो-त्तरसङ्ख्यया जुहुयात्।

ॐ अघोरेभ्योऽथ घोरेभ्यः स्वा०। अयं होमः प्रधानभूतवास्तुपुरुषमुद्दिश्य विहितः, अतोऽस्यापि प्रधानत्वात् अङ्गहोमस्यादावेव कार्यः। अथ अङ्गदेवताभ्यः शिखादिभ्यो (१) वास्तुमण्डलीयेभ्यः समित्तिलचर्वाज्यानि प्रत्येकं प्रतिद्रव्यमष्टादिसङ्ख्यया जुहुयात्। (शिख्यादीनामष्टसङ्ख्यापक्षे चरक्यादिभ्यः चतुःसंख्यया होममाचरन्ति)। ॐ शिखिने स्वाहा इति नाममन्त्रो वैदिको वा मन्त्रो होमे। ततः वास्तोष्पत इति चतसृभिः ॐ वास्तोष्पते ध्रुवा स्थूणां सत्रं सोम्यानम् द्रप्सोभेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा स्वा० (ऋ० ६/१/२४/५) इति प्रत्यृचं पञ्च पञ्च एकैकं वा घृताक्तं विल्वं जुहुयात्। ततः पूजा, स्विष्टकृत्, नवाहुतयः। ततो वास्तुमण्डलपश्चिमदेशे शिख्यादिदेवताभ्यः तत्तद्बलिः पायसबलिर्वा देयः (२) शक्तौ सत्यां सर्वेभ्यः सुवर्णेन बलिदानम्। ब्रह्मणे तु गां पयस्विनीं दद्यादिति विशेषः। चरक्यादिभ्यो माषभक्तबलिरिति कमलाकरादयः। दिक्पाल-बलिः। क्षेत्रपालबलिः। सार्वभौतिकबलिः—

बलि गृह्णन्त्विमे देवा आदित्या वसवस्तथा।
मरुतोऽथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः।।
असुरा यातुधानाश्च पिशाचोरगराक्षसाः।
डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः।।
जृम्भकाः सिद्धगन्धर्वा देवा विद्याधरा नगाः।
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः।।

---

(१) शिख्यादिहोमः पूजान्ते कार्य—विश्वकर्मप्रकाशे (अ. श्लो. ५०/९९) शिख्यादि पूजनमुक्त्वा ततः कलशस्थापनं च (वि. प्र. ५/१००-१०९) उक्त्वा अनन्तरं 'होमस्त्रिमेखले कार्यः (वि. प्र० ५/११०-११२) इत्यादिना पूजनानन्तरमेव होमविधानात्।

(२) वास्तुबलिर्होमान्ते कार्यः—'होमान्ते भक्ष्यभोज्यैस्तु वास्तुदेशे बलिं हरेत्। नमस्कारान्तयुक्तेन प्रणवाद्येन सर्वतः' (विश्वकर्मप्र० ६/११३) इति वचनात्। स च बलिः—'घृतान्नं निखिले दद्यात्' (वि. क. ५/११६-१९१) इत्यादिना शिख्यादिदेवेभ्यः पृथक् पृथग्द्रव्यैर्विहितेभ्यस्तत्तद्द्रव्येण देयः। 'अथवा पायसं दद्यात् सर्वेभ्यश्च सदीपकः' (वि. प्र. ५/१३४) इति वचनात्, 'पायसं वाऽपि दातव्यं स्वनाम्ना सर्वतः क्रमात्'। नमस्कारान्तमुक्तेन प्रणवाद्येन सर्वतः' इति मात्स्यात् 'पायसान्नैर्बलिं हरेत्' इति शारदातिलकाच्च सर्वेभ्यः पायसद्रव्येण वा बलिर्देयः। आग्नेये तु बलिविशेषमभिधाय 'यजेत सकलं वास्तु दध्यक्षतकुशैर्जलैः' (अग्निपु.) इत्युक्तम्। बलिश्च कुक्कुटाण्ड प्रमाणं तु बलिरित्यभिधीयते' इति स्मृत्यर्थसारोक्तः कार्यः। सति सम्भवे—'सर्वेभ्योऽपि हिरण्यं च ब्रह्मणे गां पयस्विनीम्' (वि. प्र. ५/१३३) इति वचनात्। शिख्यादिभ्यश्चतुश्चत्वारिंशद्भ्यः सुवर्णं, ब्रह्मणे च गां तन्निष्क्रयं, वा दद्यात्।

जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः।
मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः।।
सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहा।
—इति विश्वकर्मप्रकाशे।

ततो नवपदे ब्रह्मस्थाने (१) पृथिवीं सुभूषितां स्त्रीरूपां ध्यात्वा 'ॐ भूर्भुवः स्वः धरायै नमः' इति विश्वकर्मप्रकाशोक्तमन्त्रेण सम्पूज्य 'ॐ सर्वदेवमयं वास्तु वास्तुदेवमयं परम्' इति पठेत्। ततो गृहं प्रागादितस्त्रिसूत्र्या रक्षोघ्नेन पवमानेन च सूक्तेन वेष्टयेत् (२) ॐ कृणुष्वपाजः प्र० प्रमृणीहि शत्रून् ५ इति रक्षोघ्नं सूक्तम्। ॐ पुनन्तु मा पितरः सोम्या० रयीणाम् इति अष्टकण्डिकात्मकं पवमानसूक्तम्। ततो दुग्धपूर्णया जलपूर्णया च स्तनकुम्भीभ्यां गृहं प्रागादितः अविच्छिन्नधाराद्वयेन सिञ्चेत् (३) सप्तधान्यबीजानि प्रक्षिपेच्च। (४) अथ यजमानः गृहस्य आग्नेये ईशानकोणात् अष्टमे आकाशपदे भूमिं जानुमात्रं खनयित्वा गोमयमृज्जलैरुपलेप्य शुक्लगन्धपुष्पादिभिरलङ्कृत्य सप्तधान्यादीनि दधि च तत्र प्रक्षिप्य जलपूर्णं गन्धादिभिरर्चितं नवं कुम्भं हस्ताभ्यामादाय जानुनी भूमौ निपात्य ॐ नमो वरुणाय इति जलेन गर्त्तं पूरयेत्। ततो मृन्निर्मितपेटिकायां सप्तधान्य-दधि-शैवाल-पुष्पाणि प्रक्षिप्य ब्रह्मस्थाने पूजितवृषवास्तुप्रतिमामानीय तस्यां संस्थाप्य गन्धादिभिः सम्पूज्य—

पूजितोऽसि मया वास्तो होमाद्यैरर्चनैः शुभैः।
प्रसीद पाहि विश्वेश देहि मे गृहजं सुखम्।।१।।

---

(१) 'ततः संपूजयेत्तस्मिन् सर्वलोकवसुन्धराम् सुरूपां प्रमदारूपां दिव्याभरणभूषिताम्। ध्यात्वा तमर्चयेद्देवीं परितुष्टां स्मिताननाम्' इति वास्तुयागतत्वे रघुनन्दनोक्तेः। वास्तुमण्डलमध्ये तु ब्रह्मस्थाने प्रपूजयेत्। सुरूपां पृथिवीं दिव्यरूपाभरणसंयुताम्' (वि. प्र. ५/३४) इति वचनाच्च ब्रह्मस्थाने ब्रह्मपूजोत्तरं तस्मिन्नेव पदे तदुत्तरतो धरापूजनमाचरन्ति। केचित्तु अस्मिन्नेवावसर इति।

(२) 'वास्तूपशमनं कृत्वा ततः सूत्रेण वेष्टयेत्। रक्षोघ्नपवमानेन सूक्तेन भवनादिकम्' इति मात्स्यात्। कृणुष्वपाज इति पञ्चर्चं रक्षोघ्नसूक्तम्, पुनन्तु मा पितर इत्यादिकं नवर्चं पवमानसूक्तम्।

(३) 'बलिं च सम्यग्विधिवत्प्रयुज्य क्षीरेण धारां परितस्तु दद्यात्' इति मात्स्यात्। 'वाचयित्वा ततः स्वस्ति कर्करीं परिगृह्य च। सूत्रमार्गेण तोयस्य धारां कुर्यात्प्रदक्षिणाम्। प्रक्षिपेत्तेन मार्गेण सर्वबीजानि चैव हि' (५/८७-८८) इति विश्वकर्मप्रकाशोक्तेश्च जलदुग्धोभयधाराकरणमत्र कर्तव्यम्।

(४) 'होमशेषं समाप्याथ यजमानो वास्तुमूर्तिं रौद्रकोणेऽधोमुखीं गर्ते प्रच्छादयेत्' इति आश्वलायनगृह्यपरिशिष्टे (४/२) पूजितास्तु प्रतिमाया गर्ते प्रच्छादनमीशानकोणेऽभिहितम्, 'मृत्पेटिकां स्वर्णरत्नधान्यशैवालसंयुताम्। गृहमध्ये हस्तमात्रे गर्ते न्यासाय विन्यसेत्' इति नारदसंहितायां मृत्पेटिकायां गृहमध्ये गर्ते निधानमुक्तम्। शान्तिसारादिकारस्तु उभयैकवाक्यतया वास्तुप्रतिमां मृत्पेटिकायां निधाय गर्ते तस्या निधानमुक्तम्। अथ च वास्तुभूमेरेकाशीतिपदानि कल्पयित्वा ईशानकोणादष्टमे आकाशपदे निधानमुक्तम्, तच्च परिशिष्टोक्तसंहितोभयविरुद्धमिति चेन्न। आकाशपदस्यैव रौद्रत्वस्वीकारात्। लिङ्गतोभद्रादिमण्डले इन्द्राग्न्योर्मध्यस्य रुद्रायतनत् न त्वकथा।

नमस्ते वास्तुपुरुष भूशय्याभिरतः प्रभो।
मद्गृहं धनधान्यादिसमृद्धं कुरु सर्वदा।।२।।
प्रार्थयामीत्यहं देवं शालाया अधिपस्तु यः।
प्रायश्चित्तं प्रसङ्गेन गृहार्थं यन्मया कृतम्।।३।।
मूलच्छेदं तृणच्छेदं कृमिकीटनिपातनम्।
हननं जलजीवानां भूमौ शस्त्रेण घातनम्।।४।।
अनृतं भाषितं यच्च किञ्चिद् वृक्षस्य पातनम्।
एतत्सर्वं क्षमस्वैनो यन्मया दुष्कृतं कृतम्।।५।।
गृहार्थे यत्कृतं पापमज्ञानेनाथ चेतसा।
तत्सर्वं क्षम्यतां देव गृहशालां शुभां कुरु।।६।।
सशैलसागरां पृथ्वीं यथा वहसि मूर्द्धनि।
तथा मां वह कल्याणसम्पत्सन्ततिभिः सह।।७।। इति।
(वि० प्र० ५/१/७)

ततः मृन्मयपिधानेन पेटिकामाच्छाद्य तस्मिन् गर्त्ते शनैर्निक्षिपेत्। ततः पूर्वखातमृदा पूरयेत्। गर्तोपरि भूमिं गोमयादिनोपलिप्य गन्धादिभिर्भूषयेत्। ततः प्रागादिभित्तीनामभिमर्शनम्। तत्र मन्त्राः क्रमेण—

ॐ श्रीश्च त्वा यशश्च पूर्वे सन्धौ गोपायेताम् १ ॐ यज्ञश्च त्वा दक्षिणा च दक्षिणे सन्धौ गोपायेताम् २ ॐ अन्नं च त्वा ब्राह्मणश्च पश्चिमे सन्धौ गोपायेताम् ३ ॐ ऊर्क च त्वा सूनृता चोत्तरे सन्धौ गोपायेताम् ४ इति। अथ प्रागादिदिशामुपस्थानम्। तत्र मन्त्राः क्रमेण ॐ केता च मा सुकेता च पुरस्ताद् गोपायेतामित्यग्निर्वै केतोऽऽदित्यः सुकेता तौ प्रपद्ये ताभ्यान्नमोऽस्तु तौ मा पुरस्ताद् गोपायेतामिति १ ॐ गोपायमानं च मा रक्षमाणा च दक्षिणतो गोपायेतामित्यहर्वै गोपायमानर्ठ० रात्री रक्षमाणा ते प्रपद्य ताभ्यां नमोऽस्तु ते मा दक्षिणतो गोपायेताम् २ ॐ दीदिविश्च मा जागृविश्च पश्चाद् गोपायेतामित्यन्नं वै दीदिविः प्राणो जागृविस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पश्चाद् गोपायेताम् ३ ॐ अस्वप्नश्च माऽनवद्राणश्चोत्तरतो गोपायेतामिति चन्द्रमा वा अस्वप्नो वायुरनवद्राणस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मात्तरतौ गोपायेताम् ४ इति। (पार. गृ. ३/४/१०-१८) ततः पूर्णाहुतिं कृत्वा संस्रवप्राशनम्, पवित्राभ्यां मार्जनम्, पवित्रप्रतिपत्तिं पूर्णपात्रदानं च कृत्वा आचार्यादिभ्यो दक्षिणां (१) गां च दत्त्वा भूयसीं च दत्त्वा ब्राह्मण-

---

(१) वास्तुयागान्ते दक्षिणोक्ता वास्तुयागतत्वे—'एवं निष्पाद्य विधिना वास्तुयागं सुरोत्तम। सुवर्णं गां च वस्त्रं च आचार्याय निवेदयेत्' इति। विश्वकर्मप्रकाशे च (५/२५६-२६२) 'ततस्तु प्राङ्मुखो भूत्वा आचार्याय निवेदयेत्। दक्षिणां ब्रह्मणे दद्याद्यथावित्तानुसारतः। उदङ्मुखाय च ततः क्षमस्वेति पुनः पुनः। गां सवत्सां स्वर्णयुतां तथा वासोयुगान्विताम्। यज्ञान्ते आप्लुतान्वस्त्राना-चार्याय निवेदयेत्। दैवज्ञं च ततस्तोष्य स्थपतीन् वैष्णवानपि। दक्षिणां च ततो दद्याद् घृते छायां

भोजनं संकल्प्य (१) सपरिवारं यजमानमभिषिञ्चेत्।

अथ विश्वकर्मप्रकाशोक्ताः अभिषेकमन्त्राः

सुरास्त्वामभिषिञ्चन्तु ये च वृद्धाः पुरातनाः।
ब्रह्मा विष्णुश्च शम्भुश्च साध्याश्च समरुद्गणाः॥१॥
आदित्या वसवो रुद्रा अश्विनौ च भिषग्वरौ।
अदितिर्देवमाता च स्वाहा सिद्धिः सरस्वती॥२॥
कीर्तिर्लक्ष्मीर्धृति श्रीश्च सिनीवाली कुहूस्तथा।
दितिश्च सुरसा चैव विनता कद्रुरेव च॥३॥
देवपत्न्यश्च याश्चोक्ता देवमातर एव च।
सर्वास्त्वामभिषिञ्चन्तु शुभाश्चाप्सरसां गणाः॥४॥
नक्षत्राणि मुहूर्ताश्च पक्षाहोरात्रसन्धयः।
संवत्सरा दिनेशाश्च कलाकाष्ठालक्षणाः॥५॥
सर्वे त्वामभिषिञ्चन्तु कालस्यावयवाः शुभाः।
वैमानिकाः सुरगणा मनवः सागरैः सह॥६॥
सरितश्च महाभागा नागाः किंपुरुषस्तथा।
वैखानसा महाभागा द्विजा वैहायसाश्च ये॥७॥
सप्तर्षयः सदाराश्च ध्रुवस्थानानि यानि च।
मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः॥८॥
भृगुः सनत्कुमारश्च सनकोऽथ सनन्दनः।
सनातनश्च दक्षश्च जैगीषव्योऽथ गन्धरः॥९॥
एकतश्च द्वितश्चैव त्रितो जाबालिकश्यपौ।
दुर्वासा दुर्विनीतश्च कविः कात्यायनस्तथा॥१०॥
मार्कण्डेयो दीर्घतपाः शुनःशेपो विदूरथः।
और्वः संवर्त्तकश्चैव च्यवनोऽत्रिः पराशरः॥११॥
द्वैपायनो यवक्रतो देवरातश्च सानुगः।
प्रजापतिर्दितिश्चैव गावो विश्वस्य मातरः॥१२॥
पर्वतास्तरवः कल्पाः पुण्यान्यायतनानि च।
वाहनानि च रत्नानि लोकाश्चापि चराचराः॥१३॥

---

विलोकयेत्।' रक्षाबन्धं मन्त्रपाठं त्र्यायुषं च समाचरेत्। ऋत्विग्भ्यो दक्षिणां दद्याच्छिष्टेभ्यश्च स्वशक्तितः। दीनान्धकृपणेभ्यश्च दद्याद्वित्तानुसारतः। संप्राप्नोति नरो लक्ष्मीं पुत्रपौत्रधनान्विताम्' इति।

(१) 'अकपाटमनाच्छन्नमदत्तबलिभोजनम्। गृहं न प्रविशेद्धीमान् विपदामाकरं हि तत्' इति वचनात् ब्राह्मणान् भोजयित्वा गृहप्रवेशः कार्यः।

अग्नयः पितरस्तारा जीमूताः खं दिशो जलम्।
एते चान्ये च बहवः पुण्यसङ्कीर्त्तनाश्च ये।।१४।।
तोयैरेतः पवित्रैश्च मन्त्रौषधिबलान्वितैः।
शुभैस्त्वामभिषिञ्चन्तु सर्वोत्पातनिबर्हणैः।।१५।।इति।

ततस्तिलकाशीर्वादं रक्षाबन्धनं त्र्यायुषं घृते छायादर्शनं च कृत्वा देवान् विसृज्य यस्य स्मृत्येत्यादि पठेत्।

अथ प्रवेशसमये गणपतिं सम्पूज्य ब्राह्मणैः कृतस्वस्त्ययनः मङ्गलतूर्यशान्तिपाठेन सजलकलशः ब्राह्मणपुरस्सरं पुत्रपौत्रकलत्रादियुतः सतोरणं सध्वजपताकं (१) गृहमागत्य द्वारसमीपे उपविश्य 'अस्मिन्पुण्याहे श्रौतस्मार्त्तकर्मकरणार्थं संस्कारानेकभोगैश्वर्यादिविविध-मङ्गलोदयसिद्धये एतन्नवीनगृहप्रवेशमद् क०। द्वारशाखापूजनम्। तत्र तन्मन्त्रौ—स्थापितेयं मया शाखा शुभदा ऋद्धिदाऽस्तु मे। सुपूजिता मया शाखा सर्वदा सुस्थिराऽस्तु मे १ यो धारयति सर्वेशो जगन्ति स्थावराणि च। धाता दक्षिणशाखायां पूजितो वरदोऽस्तु मे २ ॐ धात्रे नमः। यः समुत्पाद्य विश्वेशो भुवनानि चतुर्दश। विधाता वामशाखायां स्थिरो भवति पूजितः ॐ विधात्रे नमः।

ऊर्ध्वम्—गजवक्त्र गणाध्यक्ष हे हेरम्बाम्बिकात्मज। विघ्नान् निवारयाशु त्वमूर्ध्वो-दुम्बरसंस्थितः। ॐ गणपतये नमः। अधो देहल्याम्—यस्याः प्रसादात् सुखिनो देवाः सेन्द्राः सहोरगाः। सा वै श्रीर्देहलीसंस्था पूजिता ऋद्धिदाऽस्तु मे। देहल्यै नमः। अथ द्वाराभिमुखो भूत्वा 'धर्मार्थकामसिद्ध्यर्थं पुत्रपौत्राभिवृद्ध्येष्ट त्वामहं प्रविशाम्यद्य भगो मन्दिर ते नमः।।१।। यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी। तावत्त्वं मम वंशस्य मङ्गलाभ्युदयं कुरु।।२।। इत्युक्त्वा प्रविशेत्। तत्र मन्त्रः—(पार० गृ० ३/४) ॐ धर्मस्थूणाराज श्रीस्तुपमहोरात्रे द्वारफलके इन्द्रस्य गृहा वसुमन्तो वरूथिनस्तानह प्रपद्ये सह प्रजया पशुभिः सह। यन्मे किञ्चिदस्त्युपहूतः सर्वगणसखायः साधु संवृतः। ताँ त्वा शालेऽरिष्टवीरागृहान्नः सन्तु सर्वतः"। इति देहलीमस्पृशन् दक्षिणपादपुरःसरमन्तः प्रविश्य प्रधानगृहमध्ये आग्नेय्यां दिशि तं कलशं संस्थाप्य अस्मिन्नूतनगृहे पुण्याहं कल्याणं श्रीरस्तु इति वाचयित्वा लक्ष्मीः सम्पूजयेत्। गृहस्य धारकं स्तम्भं पूजयेत्—धारणार्थं महाभागा निर्मितो विश्वकर्मणा। स्थापितः शुभदो नित्यं गृहभारक्षमो भव।।१।। दीपस्थाने

(१) गृहप्रवेशाङ्गत्वेन पताकादिरोपणप्रकारो विश्वकर्मप्रकाशे (१०/६८-१०१) विहितः 'वितानैस्तोरणैः पुष्पैः पताकाभिर्विशेषतः। अलंकृत्य नवं गेहं देहलीं पूजयेत्ततः। दिक्पालांश्च तथा क्षेत्रपालं ग्रामाधिदैवतान्। प्रणम्य विधिवत्पूज्य द्वारमार्गे विशेद् गृहम्। पूजयेद् गणनाथं च मातृकाश्च विशेषतः। वसोर्द्धारां पातयित्वा ग्रहांश्चैव तु पूजयेत्। वास्तुनाथं च संपूज्य ब्राह्मणान् भोजयेत्ततः। गोदानं भूमिदानं च कुर्याच्चैव यथाविधि' इति। गृहेऽपि पताकाः कुण्डसिद्ध्युक्तवर्णाचिता दशकार्या इत्युक्तं विश्वकर्मप्रकाशे (१३/१०-१०५) यद् द्वारमार्गे पूर्वे तु ध्वजः षोडशहस्तकः। स्तम्भोऽस्य विधिवत् स्थाप्यः सघण्टाकिङ्किणीयुतः' इति।

दीपं प्रज्वाल्य तिमिरस्य तिरस्कर्त्ता ज्योतीरूप: सुविश्रुत:। विघ्नान्धकारनाशाय पूजयामि सुसिद्धिदम् ।। ॐ दीपाय नम:। महानस इति ख्यातो देवयज्ञादिसिद्धिकृत्। अन्नादिसाधनं स्थानं धर्ममूलं शुभप्रदम्। चुल्यां धर्माय: नम:। सम्मार्जस्थाने—पूतना शुभदा ज्येष्ठा सदा सन्धानसंस्थिता। स्थानं चोत्करसम्पत्तेरस्तु मे सर्वसिद्धिदम्। ज्येष्ठायै नम:। जल-स्थाने—शङ्खस्फटिकवर्णाभश्वेतहाराम्बरावृत। पाशहस्त महाबाहो दयां कुरु दयानिधे। वरुणाय नम:। पेषण्याम्—सौभाग्यं सुभगे देहि पेषणी संस्थिता सदा। पिष्टनिष्पादनार्थं त्वं पूजिता शुभदाऽस्तु मे।। ॐ सुभगायै नम:। उलूखले—

ब्रीहीणां कण्डनं यच्च तुषाणाञ्च विमोचनम्।
त्वदधीनमत: पूजां करोमि तव सिद्धये।। रौद्रपीठायै नम:।
शय्यायाम्—
काम: कामप्रदो मेऽस्तु शयनीये सुपूजित।
पूजां गृहाण सुमुख धनधान्यसमृद्धये।। ॐ कामाय नम:।
गृहमध्ये—
मध्ये सुपूजिता देवा: सन्तु मे सर्वसिद्धिदा: ।
नश्यन्तु सर्वविघ्नानि देवानां पूजनादिह।। सर्वदेवेभ्यो नम:।
पशुस्थाने—
सर्वाधिपो महादेव ईशान: शुक्लशङ्कर:।
पशूनां पतिरस्माकं पूजित: शुभद: सदा ।। ॐ पशुपतये नम:।
एतदनन्तरं वा पूर्णाहुत्यादिविसर्जनान्तं पूर्वोक्तं कुर्यात्।

**इति गृहप्रवेश:**

●

# परिशिष्टम्- १

पूर्वं ध्रुवादीनां नामानि लिखितानि ध्रुवश्च धान्यश्चेत्यादिना तत्र प्रस्तारप्रकारो रत्नमालायाम्—

स्थापयेल्लघुमधो गुरोः परं स्याद्यथोपरि तथैव पूरयेत्।
पश्चिमं च गुरुभिः पुनः पुनः सर्वलघ्ववधिरित्ययं विधिः।।

इत्यादिना ध्रुवादिगृहाणां प्रस्तारवशेन षोडशप्रकाराः सिद्ध्यन्ति। यथोक्तं रत्नमालायाम्—

प्रदक्षिणं सन्मुखादलिन्दं विद्याल्लघुस्थानसमाश्रितश्च।
गृहस्य पूर्वादिगतेष्वलिन्देष्वेवं भवेयुर्दशषट्कभेदाः।। इति।

तद्यथा—

पू.द.प. उ. = ध्रुवम्
ऽऽ ऽ ऽ = ध्रुवम्
।ऽ ऽ ऽ = धान्यम्
ऽ। ऽ ऽ = जयम्
।। ऽ ऽ = नन्दम्
ऽऽ । ऽ = खरम्
।ऽ । ऽ = कान्तम्
ऽ। । ऽ = मनोरमम्
।। । ऽ = सुमुखम्
ऽऽ ऽ । = दुर्मुखम्
।ऽ ऽ । = उग्रम्
ऽ। ऽ । = रिपुम्
।। ऽ । = वित्तदम्
ऽऽ । । = नाशम्
।ऽ । । = आक्रान्तम्
ऽ। । । = विपुलम्
।। । । = विजयाख्यम्

अत्रेदमवधेयम्, प्रथमभेदे ध्रुवाख्यमूर्ध्वमुखं गृहम्। द्वितीये पूर्वद्वारं धान्याख्यं। तृतीये दक्षिणद्वारं जयाख्यम्। चतुर्थे प्राग्दक्षिणद्वारं नन्दाख्यम्। पञ्चमे पश्चिमद्वारं खराभिधम्। षष्ठभेदे पूर्वपश्चिमद्वारं कान्ताख्यम्। सप्तमे दक्षिणपश्चिमद्वारं मनोरमम्। अष्टमे पूर्वदक्षिणपश्चिमद्वारं सुमुखम्। नवमे सौम्यद्वारं दुर्मुखाख्यम्। दशमे पूर्वोत्तरद्वारमुग्राख्यम्। एकादशे याम्यसौम्यद्वारं रिपुदम्। द्वादशे पूर्वदक्षिणोत्तरद्वारं धनदाख्यम्। त्रयोदशे पश्चिमोत्तरद्वारं नाशाख्यम्। चतुर्दशे पूर्वपश्चिमोत्तद्वारमाक्रन्दम्। पञ्चदशे याम्यपश्चिमसौम्यद्वारं विपुलाख्यम्। षोडशभेदे चतुर्दिक्षुद्वारं विजयाख्यमिति।

पिण्डानयने इष्टनक्षत्रकल्पनायां ज्योतिःसागरे—

आर्द्रादितिगुरुश्चैव सर्पश्चैव पिताभगम्। शतभं पूर्वयुग्मं च नवेष्टा गृहतारकाः।

एवमेव वास्तुप्रदीपे—'त्रिभिस्त्रिर्वेश्मनिकृत्तिकात उद्वेगपुत्राप्तिधनाप्तिशोकः। शत्रोर्भयं राजभयञ्च मृत्युः सुखं प्रवासञ्च नवप्रभेदा' इति।

विष्णुं व्यकायेत्यस्योपपत्तिः—

अत्र प्रथमालापघटितमेव कल्प्यते पिण्डमान = ८ या + आ, इदं पिण्डमानं पुनरष्टगुणितं सप्तविंशतिभक्तं तथा स्वरूपान्तरादिकरणेन यातं

$$\frac{\text{१० या + ८ आ}}{\text{२७}} = \frac{\text{१० या + ८ या + ८-८}}{\text{२७}} = \frac{\text{१० या + (आ-१) + ८}}{\text{२७}}$$

$$\frac{\text{१० या + ८ व्येकाय + ८}}{\text{२७}} = \frac{\text{१० या २७ + व्येकाय-१९ व्येकाय + ८}}{\text{२७}}$$

$= \frac{\text{१० या- १९ व्येकाय + ८}}{\text{२७}}$ = अत्र लब्धिमानं कालकं शेषं नक्षत्रसंख्यासमं तथा हरलब्धितः शेषयुतो भाज्यसमो भवतीति जातं तुल्यं पक्षद्वयम् १० या- १९ व्येकाय + ८ = २७ का + न, ततः समशोधनादिना जातं कालकमानम्

$$= \frac{\text{१० या - १९ व्येकाय + - न}}{\text{२७}} \quad \frac{\text{१० या- (१९ व्येकाय + न) + ८}}{\text{२७}}$$

अत्र यदि १९ व्येकाय + न = शे कल्प्यते सदा जातं कालकमानम्

$= \frac{\text{१० या - शे + ८}}{\text{२७}}$ अत्र रूपसमे धनक्षेपे १०, २७ दृढभाज्य हाराभ्यां जाते गुणलब्धी ८, ० तथा 'यदागतौ लब्धिगुणावित्यादिना ऋणक्षेपे' इदं मानं धनं भवेत्तदा पूर्वागतेनानेन ८ गुणेन गुणितं २७ तष्टमभीष्टो गुण एव 'ते भाज्यतद्भाजकवर्णमाने' इत्यादिना यावत्तावन्मानं भवति। तथात्र यदि—शे + ८ मानं ऋणं तदा द्वितीयेनानेन १९ गुणेन गुणितं २७ तष्टं शेषं यावन्मानं भविष्यति। अत्राचार्येण शे इत्यस्य मानं एकद्वित्र्यादिसंख्यातुल्यं प्रकल्प्य अभीष्टानि यावत्तावन्मानानि साधितानि तद्यथा यदि शे = तदा - शे + ८ - १ + ८ = इदं धनमतः इयं संख्या पूर्वगुणेन ८ गुणिता सप्तविंशतिभक्तजातं + २ शेषमिदमेव यावत्तावन्मानम् एवं यदि शे = २ तदा - शे + ८ = २ + ८ = ६ = धनम् तदात्रापि कुट्टकेन = २१ इदं द्विशेषे यावन्मानम् एवं यदा शे = ८। तदा - शे + ८ = ० तदा यावन्मानं शून्यसमं वा 'इष्टाहतस्वस्वहरेणे'त्यादिना सप्तविंशतिसमं भविष्यति। अथ यदि शे = ९ तदा—शे + ८ = — १ इदं ऋणात्मकम्। अत इयं संख्या द्वितीयेन गुणेना(१९)नेन गुणिता सप्तविंशतिभक्ता लब्धं यावन्मानम् = एवं मानानि आगच्छन्ति। तत एभिर्या-वत्तावन्मानैः पिण्डमानेऽस्मिन् ८ या + आ। उत्थापनेन पिण्डमानमुपपद्यते।

अथ यदि पिण्डे नक्षत्रायतक्षणयोः सप्तविंशतिनाग२७, ८तुल्ययोर्घातो निक्षिप्यते तदा लक्षणाभ्यां भक्ते क्षेपस्य निःशेषत्वात् त एव नक्षत्रायमाने आगमिष्यतस्तेन सोऽपि पिण्डो भवितुमर्हतात्युपपद्यते श्रीसुधाकरद्विवेदिकृतं 'इष्टायनन्देदुहति'रित्यादि पद्यम्।

### 'इष्टभात्यष्टिघाते च' इत्यस्योपपत्तिः

अत्र पिण्डमानं प्रथमं तथा कल्प्यं येन प्रथमालापो घटते इत्येतदर्थं या संख्या अष्टभिर्गुणिता रूपोनासप्तविंशतिहृता निःशेषा भवति तादृशी प्रथमा संख्या कुट्टकेन १७ अतः कल्पितं पिण्डमानं २७ या + १७ न इदमिष्टगुणं २७ भक्तं शेषमिष्टनक्षत्रमेव तेन प्रथमा लाभः स्वयं घटते। पुनरिदमष्टभिस्तष्टं प्रथमस्थाने ३ या द्वितीयस्थाने सप्तदशेष्टनक्षत्रघातोत्पन्न आय एव तज्ज्ञापकः यदि आकल्पयते तथेष्टायश्च इ आ कल्प्यते ततो जातं शेषमानं ३ या + आ इदमष्टहृतम्। अत्र कल्प्यते लब्धि = का, तथा हरलब्धिघातः इष्टायरूपशेषयुक्तो भाज्यसम इत्यनेन जातौ पक्षौ ३ या + आ = ८ का + इआ समशोधनादिना यावन्मानम् = $\frac{८ \text{ का} + \text{इआ} - \text{आ}}{३}$ अत्र यदि इ आ - आ इदं ऋणात्मकं तथा का = नी + १ प्रकल्प्य जातं यावत्तावन्मानस्य रूपान्तरमिदम् =

$$\frac{८ (\text{नी} + १) + \text{इ आ} - \text{आ}}{३} = \frac{८ \text{ नी} + ८ + \text{इआ} - \text{आ}}{३}$$

उभयत्र यदि भाज्यमानं त्रिभिर्निःशेषं भवति तदैव यावत्तावन्मानमभिन्नं भविष्यतीति स्पष्टम्। अतो कालकमानं नीलकमानं वा तथा कल्प्यं तथा यावत्तावन्मानभिन्नं स्यात् यतो यावत्तावन्मानेन पूर्वकल्पितपिण्ड२७या + १७ न इदं समुत्थाप्य स्फुटा पिण्डमिति बोध्येति सर्वमुपपन्नम्।

### गजैस्तष्टमिष्टाङ्गं शोध्यमिति

कुट्टकेन ज्ञातं या संख्या सप्तविंशतिगुणाऽष्टभक्ता शेषं रूपमुत्पादयति सा त्रिमिता ततः कल्पितं पिण्डमानम् ८१ या + १७ न येन प्रथमालापस्य संगतिर्भवति। पुनः पिण्डमानमिदं ८१ या + १७ न अष्टभिर्भक्तं जातं या + न अस्य द्वितीयखण्डे 'न' इत्यत्र पुनर्विभक्ते शेषं = शे तथा कृते जातं या + शे इदमप्यष्टभक्तमत्र लब्धिः = का शेषमिष्टायसममिति। अत्रापि हरलब्धिघातस्य इष्टायरूपशेषयुतस्य भज्यराशिस्तुल्यत्वात् जातौ तुल्यौ पक्षौ या + शे = ८ का + इआ समशोधनादिना या + ८ का + इआ - शे अत्रापि यदि इआ - शे इदं ऋणात्मकं तदा नो + १ + का प्रकल्प्य जातं यावन्मानम् = ८ (नी+ १) + इआ - शे = ८ नी + ८ + इआ-शे यावत्तावन्मानद्वये कालकनीलकयोर्मानशून्यसमं प्रकल्प्य जातं यावत्तावन्मानम् = इआ - शे वा, ८ + इआ-शे आभ्यां यावत्तावन्मानमिदं ८१ या + १७ न समुत्थाप्य व्यक्तं पिण्डमानं ज्ञेयम्। नक्षत्रायतक्षणयोरनयो २७, ८ घातस्य २१६ रूपस्य योजनेनापि विकाराभावात् पिण्डमानमागच्छतीत्युपपत्रं सर्वम्।

### नागघ्नेष्टायात्त्यतेदिष्टमक्षमिति

प्रथमं या संख्याऽष्टगुणिता सप्तविंशतिहृता २६ शेषमुत्पादयति तादृशी प्रथमा

संख्या कुट्टकेन ज्ञाता ६४ अतः कल्पितं पिण्डमानम् = ६४ या + इआ इदं वसुभिर्भक्तं शेषमिष्टायसमो भवतीति प्रथमालापः स्वयं घटते। पुनरिदं पिण्डमानं नागैर्गुणितं २७ भक्त जातं शेष - या + ८ इआ इदमपि सप्तविंशतिभक्तं लब्धं कलाकं शेषमिष्टनक्षत्रतुल्यं तथा शेषयुतस्य हरलब्धिघातस्य भाज्यराशिस्तुल्यत्वात् जातौ पक्षौ—या + ८ इआ = २७ का + इन अत समशोधनादिना लब्धं यावत्तावन्मानं = २७ + ८ इआ-इन यद्यत्र ८ इआ इन = ऋणात्मकं तदा नी = १ + का प्रकल्प्य यावत्तावन्मानस्य स्वरूपान्तरमिदम् = -२७ (नी - १) + ८ इआ - इन = - २७ नी + २७ + इन - इन। उभयत्र क्रमेण कालकमानं नीलकमानं च शून्येनोत्थाप्य जातं या = ८ इआ - इन वा इआ - इन + २७ ततो यावत्तावन्मानेन पिण्डमानेऽस्मिन्—६४ या + इआ उत्थापनेन पिण्डमानं सुबोधं भवति। अत्र पिण्डं नक्षत्रायतक्षणयोर्घातस्य २७ × ८ = २१६ निक्षेपणेनापि विकाराभावात् पिण्डमानं भवतीत्युपपत्रं सर्वम्।

**व्यकेष्टर्क्षहताः द्विबाणशशिन इत्यादेः**

कल्प्यते पिण्डमानम् = या, इदं नागैर्गुणित २७ भक्तं लब्धं कालकं प्रकल्प्य शेषं नक्षत्रमानं तथा हरलब्धिघातः शेषयुतो भाज्यराशितुल्यो भवतीति नियमात् जातौ तुल्यौ पक्षौ ८ या = $\frac{\text{२७ का + इन}}{\text{८}}$ अतः या + पुनः पिण्डमानमिदं या वसुभिर्भक्तं लब्धं नीलकं शेषमिष्टं प्रकल्प्य पुनर्जातं यावत्तावन्मानम् =

$\frac{\text{८ नी + इआ}}{\text{१}}$ अत्र यावत्तावन्माने तुल्ये अतः = $\frac{\text{२७ का + इन}}{\text{१}}$ =

८ नी + इआ समशोधनादिना जातं कालकमानम् = $\frac{\text{६४ नी + ८ इआ - इन}}{\text{२७}}$

ततः ६४, २७ दृढभाज्यहाराभ्यां रूपक्षेपे जातौ लब्धिगुणौ १९, ८ अत्र 'ते भाज्यतद्भाजकवर्णमाने' इत्यादिना गुण एव 'नीलकमानं तेन अभीप्सितक्षेपविशुद्धिनिघ्न इत्यादिना रूपक्षेपीयो गुणोऽयं८मिष्टक्षेपेणानेन ८ इआ-इन गणिते। जातः ६४ इआ - ८ स्वहारेणानेन २७ भक्ते जातः १० इआ-इन ततः इष्टाहतस्वस्वरेण युक्त' इत्यादिना कल्पितेष्टपीतकगुणिततद्धारेण सहितो जातं २७ पी × १० इआ-इन = नीलकमानम् नीलकमानेन यावत्तावन्माने उत्थाप्य जातं यावत्तावन्मानम् = २१६ पी + ८१ इआ - ६४ इन, अत्र कल्प्यते पीतकमानं = लो + ( न -१) ततः उत्थापनेन जातं यावत्तावन्मानम्।

= २१६ लो + २१६ इन - २१६ + ८१ इआ - ६४ इन
= २१६ लो + १५२ इन - २१६ + ८१ इआ
= २१६ लो + १५२ इन - १५२ - ८१ + १७ + ८१ इआ
= २१६ लो + १५२ (इन- १) + ८१ ( इआ - १) + १७

अत्रान्तिमखण्डत्रये यदि संख्या २१६तोऽधिका भवेत्तदा लोहितकस्य तथा ऋणमानं कल्प्यं यथा तन्माणगुणितभूपाश्विभी रहिता सा खण्डत्रयभवा संख्या धनात्मिका भूपाश्विभ्योऽल्पा च स्यात् । अर्थात् सा संख्या २१६भिस्तष्टाऽवशेषं तदेव पिण्डमानं ज्ञेयं तस्मिन्नेकादिगुणितभूपाश्विसमां संख्यां प्रक्षिप्यानेकधा पिण्डमान् साध्यमित्युपपन्नम्। अनयैवोपपत्त्या एकोनितेष्टर्क्षेत्यादि रामदैवज्ञकृतं पिण्डानयनमुपपद्यते।



## परिशिष्टम्- २

# गृह-समृद्धि-हेतु स्मर्यमाण वास्तुनियम

अनन्त शक्तियों से समन्वित प्रकृत प्रकृति में सृष्टि, विकास एवं प्रलय की प्रक्रिया सतत् प्रवहमान रहती है। वास्तुशास्त्र में पञ्चमहाभूतों के साथ-साथ प्रकृति की तीन शक्तियों पर भी विचार किया जाता है; वे शक्तियाँ हैं—गुरुत्व ऊर्जा, चुम्बकीय ऊर्जा एवं सौर ऊर्जा। पञ्चमहाभूत से निर्मित शरीर को सुखमय एवं स्वस्थ बनाने के लिये जिस भवन में अग्नि, आकाश, भूमि, जल एवं वायुस्वरूप पञ्चमहाभूत का यदि सम्यक् रूप से नियोजन किया जाय तो उस निर्मित भवन में निवास करने वाले प्राणी निश्चित रूप से सदा-सर्वदा शारीरिक, मानसिक एवं भौतिक रूप से समृद्ध रहते हैं। अतः भवन-निर्माण के क्रम में सर्वसाधारण के लिये कतिपय स्मर्तव्य नियमों का उल्लेख यहाँ किया जा रहा है, जिसका पालन करने पर निर्मित भवन एवं उसको अपना आश्रय बनाने वाले प्राणी सदैव ऊर्जावान बने रहते हैं; वे नियम निम्नवत् हैं—

१. सफेद रंग की सुगन्धित मिट्टी वाली भूमि ब्राह्मणों के लिये श्रेष्ठ मानी गयी है।

२. लाल रंग की कसैले स्वाद वाली भूमि क्षत्रिय, राजनेता, सेना व पुलिस के अधिकारियों के लिये शुभ मानी गयी है।

३. हरे या पीले रंग की खट्टे स्वाद वाली भूमि व्यापारियों, व्यापारिक स्थलों तथा वित्तीय संस्थानों के लिये शुभ मानी गयी है।

४. काले रंग की कड़वे स्वाद वाली भूमि अशुभ होती है। यह शूद्रों के लिये उपयुक्त कही गई है।

५. मधुर, समतल, सुगन्धित व ठोस भूमि भवन बनाने हेतु उपयुक्त होती है।

६. खुदाई में चींटी, दीमक, अजगर, साँप, हड्डी, कपड़े, राख, कौड़ी, जली हुई लकड़ी व लोहा मिलना अशुभ होता है।

७. भूमि का ढ़लान उत्तर व पूर्व में तथा छत की ढ़लान ईशान में शुभ होती है।

८. भूखण्ड के दक्षिण या पश्चिम में ऊँचे मकान, पहाड, टीले या पेड अशुभ होते हैं।

९. भूखण्ड से पूर्व या उत्तर की ओर यदि कोई नदी या नहर हो तथा उसका प्रवाह उत्तर या पूर्व की ओर हो तो वह भूखण्ड शुभ होता है।

१०. भूखण्ड के उत्तर, पूर्व या ईशान में भूमिगत जलस्रोत, कुआँ, तालाब व बावड़ी शुभ होती है।

११. भूखण्ड या भवन यदि दो बड़े भूखण्डों के मध्य हो तो वह अशुभ होता है।

१२. आयताकार, वृत्ताकार व गोमुख भूखण्ड गृह-निर्माण के लिये शुभ होता है। वृत्ताकार भूखण्ड में निर्माण भी वृत्ताकर ही होना चाहिये।

१३. सिंहमुखी भूखण्ड व्यावसायिक भवन-हेतु शुभ होता है।

१४. भूखण्ड का उत्तर या पूर्व या ईशान कोण में विस्तार शुभ होता है।

१५. भूखण्ड के उत्तर या पूर्व में मार्ग शुभ होता है। दक्षिण या पश्चिम में मार्ग व्यापारिक स्थल के लिये शुभ होते हैं।

१६. भवन के द्वार के सामने मन्दिर, खम्भा व गड्ढा अशुभ होते हैं।

१७. यदि आवासीय परिसर में बेसमेन्ट का निर्माण कराना हो तो उसे उत्तर या पूर्व में ब्रह्मस्थान को बचाते हुये बनाना चाहिये। बेसमेन्ट की ऊँचाई कम से कम ९ फीट होनी चाहिये तथा वह तल से ३ फीट ऊपर होना चाहिये, जिससे उसमें प्रकाश व हवा का निर्बाध रूप से आवागमन हो सके।

१८. कुआँ, बोरिंग व भूमिगत टंकी उत्तर, पूर्व या ईशानकोण में बनानी चाहिये।

१९. भवन के प्रत्येक मंजिल के छत की ऊँचाई १२ फीट होनी चाहिये; किन्तु यह १० फीट से कम कथमपि नहीं होनी चाहिये।

२०. भवन का दक्षिणी भाग हमेशा उत्तरी भाग से ऊँचा होना चाहिये एवं पश्चिमी भाग हमेशा पूर्वी भाग से ऊँचा होना चाहिये। भवन में नैर्ऋत्य सबसे ऊँचा व ईशान सबसे नीचा होना चाहिये।

२१. भवन का मुख्य द्वार ब्राह्मणों को पूर्व में, क्षत्रियों को उत्तर में, वैश्य को दक्षिण में तथा शूद्रों को पश्चिम में बनाना चाहिये। इसके लिये ८१ पदों का वास्तुचक्र बनाकर निर्णय करना चाहिये।

२२. द्वार की चौड़ाई उसकी ऊँचाई से आधी होनी चाहिये। बरामदा घर के उत्तर या पूर्व में ही बनाना चाहिये।

२३. खिड़कियाँ घर के उत्तर या पूर्व में अधिक तथा दक्षिण या पश्चिम में कम संख्या में होनी चाहिये।

२४. घर के ब्रह्मस्थान को खुला, साफ तथा हवादार होना चाहिये।

२५. गृहनिर्माण में ८१ पद वाले वास्तुचक्र में ९ स्थान ब्रह्मस्थान के नियत किये गये हैं।

२६. चारदीवारी के अन्दर सबसे ज्यादा खुला स्थान पूर्व में रखना चाहिये। उससे कम उत्तर में, उससे कम पश्चिम में तथा सबसे कम दक्षिण में छोड़ना चाहिये। दीवारों की मोटाई सबसे ज्यादा दक्षिण में, उससे कम पश्चिम में, उससे कम उत्तर में तथा सबसे कम पूर्व दिशा में होनी चाहिये।

२७. घर के ईशान कोण में पूजाघर, कुआँ, बोरिंग, बच्चों का कमरा, भूमिगत वाटर टैंक, बरामदा, लिविंग रूप, ड्राइंग रूम अथवा बेसमेन्ट बनाना शुभ होता है।

२८. घर की पूर्व दिशा में स्नानघर, तहखाना, बरामदा, कुआँ, बगीचा व पूजाघर बनाया जा सकता है। घर के आग्नेय कोण में रसोईघर, बिजली के मीटर, जेनरेटर, इन्वर्टर व मेन स्विच लगाया जा सकता है। दक्षिण दिशा में मुख्य शयनकक्ष, भण्डार-गृह, सीढ़ियाँ व ऊँचे वृक्ष लगाये जा सकते हैं। घर के नैर्ऋत्य कोण में शयनकक्ष, भारी व कम उपयोग के सामान का स्टोर, सीढ़ियाँ, ओवरहेड वाटर टैंक, शौचालय व ऊँचे वृक्ष लगाये जा सकते हैं।

२९. घर के वायव्य कोण में अतिथिघर, कुँआरी कन्याओं का शयनकक्ष, रोदन कक्ष, लिविंग रूम, ड्राइंग रूम, सीढ़ियाँ, अन्नभण्डारकक्ष व शौचालय बनाये जस सकते हैं।

३०. घर की उत्तर दिशा में कुआँ, तालाब, बगीचा, पूजाघर, तहखाना, स्वागतकक्ष, कोषागार व लिविंग रूम बनाये जा सकते हैं।

३१. घर का हल्का सामान उत्तर या पूर्व या ईशान में रखना चाहिये।

३२. घर के नैर्ऋत्य कोण में किरायेदार या अतिथियों को नहीं ठहराना चाहिये।

३३. सोते समय सिर पूर्व या दक्षिण की तरफ होना चाहिये अथवा मतान्तर से अपने घर में पूर्व दिशा में सिर करके सोना चाहिये। ससुराल में दक्षिण की ओर एवं परदेश में पश्चिम की ओर सिर रखकर सोना चाहिये।

३४. दिन में उत्तर की ओर तथा रात्रि में दक्षिण की ओर मुख करके मूत्र का त्याग करना चाहिये। घर के पूजास्थान में बड़ी मूर्तियाँ नहीं होनी चाहिये।

३५. घर में दो शिवलिंग, तीन गणेश, दो शंख, दो सूर्यदेव की प्रतिमा, तीन देवी-प्रतिमा, दो गोमतीचक्र व दो शालिग्राम नहीं रखना चाहिये।

३६. घर में भोजन सदैव पूर्व या उत्तर की ओर मुख करके ही करना चाहिये।

३७. सीढ़ियों के नीचे पूजाघर, शौचालय व रसोईघर का निर्माण नहीं कराना चाहिये।

३८. धन की तिजोरी का मुख उत्तर दिशा में रखना चाहिये।

